त्वयाशंकितंपराजयंचापिप्राप्तोऽहमित्याह तेनसख्यारहितः अतोहृदयेन अस्मद्हृदयेनवाशून्यः अंगहेराजन् उरुक्रमस्यपरिग्रहं षोडशसहस्रस्त्रीलक्षणं असद्भिर्नीचैः अबला योषेव २० श्रीकृष्णवियोगएवात्रहेतुर्नान्यइत्याह तदिति यतः येभ्यः ईशेनरिक्तं शून्यमसत्कार्याक्षमं सन्मंत्रविधानेरपिभस्मनिहुतमिव अतिप्रीतादपिकुहकान्मायाविनः सकाशाद्राद्धं लब्धंयथाअसत् सम्यक्कर्षणादिनाप्यूषरभूमौउप्तंबीजमिव २१ सुहृत्सुरेत्वयापृष्टानांनःसुहृदांमध्येचत्वारः पंचवावशेषिताः तत्रहेतुः विप्रशापेत्यादि वारुणीं मन्नमयीं अजानतामिवान्योन्यमेरकामुष्टिभिर्निघ्नतां २२ २३ अवशेषिताइत्यनेनोक्तंहेतुकर्तारमाहत्रिभिः प्रायेणेति भावयंतिपालयंति २४ जलौकसांमत्स्यादीनांमध्येम हांतः स्थूलाः अणीयसः सूक्ष्मान् यथाभक्षयंति २५ एवंबलिष्ठैर्महद्भिः पांडवैर्दुर्योधनजरासंधादीन्निहत्ययदून्यदुभिरन्योन्यंनिहत्य भगवान्भुवोभारभूतान्संहृतवान् २६ अ तःपरंवक्तुंनशक्नोमीति सूचयन्नाह देशकालोचितार्थयुक्तानि मनःपीडोपशमकराणिचगोविंदस्यवचनानिस्मरतोमेममचित्तंहरंति आकर्षंति २७ एवमिति सूतोक्तिः अतिदृढेन

सोऽहंनृपेंद्ररहितःपुरुषोत्तमेनसख्याप्रियेणसुहृदाहृदयेनशून्यः अध्वन्युरुक्रमपरिग्रहमंगरक्षन्गोपैरसद्भिरबलेवविनिर्जितोऽस्मि २० तद्वै धनुस्तइषवःसरथोहयास्तेसोऽहंरथीनृपतयोयतआनमंति सर्वंक्षणेननदभूदसदीशरिक्तंभस्मन्हुतंकुहकराद्धमिवोप्तमूष्याम् २१ राजंस्त्व याऽभिपृष्टानांसुहृदांनःसुहृत्पुरे विप्रशापविमूढानांनिघ्नतांमुष्टिभिर्मिथः २२ वारुणींमदिरांपीत्वामदोन्मथितचेतसाम् अजानतामिवान्यो न्यंचतुःपंचावशेषिताः २३ प्रायेणैतद्भगवतईश्वरस्यविचेष्टितम् मिथोनिघ्नंतिभूतानिभावयंतिचयन्मिथः २४ जलौकसांजलेयद्वन्महांतो ऽदंत्यणीयसः दुर्बलान्बलिनोराजन्महांतोबलिनोमिथः २५ एवंबलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः यदून्यदुभिरन्योन्यंभूभारान्संजहारह २६ देशकालार्थयुक्तानिहृत्तापोपशमानिच हरंतिस्मरतश्चित्तंगोविंदाभिहितानिमे २७ एवंचिंतयतोजिष्णोःकृष्णपादसरोरुहम् सौहार्देनाति गाढेनशांतासीद्विमलामतिः २८ वासुदेवांघ्र्यनुध्यानपरिबृंहितरंहसा भक्त्यानिर्मथिताशेषकषायधिषणोऽर्जुनः २९ गीतंभगवताज्ञानंयत्तत् संग्राममूर्द्धनि कालकर्मतमोरुद्धंपुनरध्यगमत्प्रभुः ३० विशोकोब्रह्मसंपत्त्यासंछिन्नद्वैतसंशयः लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ३१ निशम्यभगवन्मार्गंसंस्थांयदुकुलस्यच स्वःपथायमतिंचक्रेनिभृतात्मायुधिष्ठिरः ३२

स्नेहेनाचिंतयतोमतिः शांताविशोका विमलाविरक्ताचासीत् २८ मतिवैमल्यफलमाह वासुदेवांघ्र्यनुध्यानेनपरिबृंहितंरंहोवेगोयस्याः तयानिर्मथिताउन्मूलिताअशेषाः कषायाः कामादयोयस्याः साधिषणाबुद्धिर्यस्यसः ज्ञानंपु नरध्यगमदित्युत्तरेणान्वयः २९ कालेनकर्मभिः तमसाभोगाभिनिवेशेनचरुद्धमावृतंसत् ३० ज्ञानफलमाह विशोकइति एतदेवशोकहेत्वभावेनोपपादयति शोक स्यहिहेतुर्द्वैतभ्रमः तस्यदेहः तस्यलिंगम् तस्यगुणाः तेषामविद्या तत्रब्रह्मसंपत्त्याब्रह्माहमितिज्ञानेनलीनाप्रकृतिरविद्यायस्मिन् तन्नैर्गुण्यंभवति ननुसुषुप्तिप्रल ययोरिवाविद्याशेषम् तस्मान्नैर्गुण्याद्गुणकार्यलिंगनाशः अलिंगत्वाच्च असंभवः सम्यग्भोगायभवतिपुनःपुनरितिसंभवः स्थूलदेहः तद्रहितः ततश्चतत्परिच्छेदाभा वात्संछिन्नोद्वैतलक्षणःसंशयोभ्रमोयस्यसविशोकःजातइति ३१ भगवतोमार्गमालक्ष्य यदुकुलस्यसंस्थांनाशंश्रुत्वा नारदोक्तंचानुस्मृत्य स्वःपथायस्वर्गमार्गाय नि भृतात्मानिश्चलचित्तः ३२ श्रीगोपीजनवल्लभायगोवर्धनश्रीकृष्णायनमः ॐ ॐ ॐ ॐ ॐ ॐ

तांदुर्विज्ञेयां वक्ष्यतिदिद् सौदामन्यायथा काशेयंत्याहित्वाऽभ्रमंडलं गतिर्नलक्ष्यतेमर्त्यैस्तथा कृष्णस्यदैवतैरिति संसृतेरुपरराम जीवन्मुक्तोबभूव देहं जहाविति वा ३३ तदेवमु-
क्त्वापियादवेभ्यो भगवतोवैलक्षण्यमबुध्वातत्साम्यंवदतोमंदमतीन्प्रति वैलक्षण्यंस्पष्टयति द्वाभ्याम् ययायादवरूपयातन्वा भुवोभारंकंटकेनकंटकमिवाहरत् यादवतनुं मृषा
तनुर्भ्येतिद्वयमपीश्वरस्यसंहार्यत्वेनसममेव ३४ श्रीकृष्णमूर्तेर्विशेषमाह यथेति तान्यपियथाधत्तेजहातिच तदाह यथानटोनिजरूपेणास्थितोरूपांतराणिधत्तेः तथैवेत्तेच न
चानदपिकलेवरंजहौ अंतरधादित्यर्थः ३५ युधिष्ठिरस्यस्वर्गारोहप्रसंगायकलिप्रवेशमाह यदेति स्वतन्वाजहौ स्वतनोरेववैकुंठरोहात् श्रवणार्हासती कथायस्य तदायदहस्त-
स्मिन्नेव अहरितिलुप्तसप्तम्यंतंपदम् अप्रतिबुद्धचेतसामिति विवेकिनांतुनप्रभुरित्युक्तम् अन्ववर्ततेति पूर्वमेवांशेन प्रविष्टस्यतेन रूपेणानुवृत्तिरुक्ता ३६ बुधोयुधिष्ठिरः
तस्याकलेः परिसर्पणंप्रसरणंविलोक्य कथंभूतं लोभायधर्मचक्रंयस्मिन् जिह्मंकौटिल्यं पर्यधात् तदुचितंपरिधानमकरोत् ३७ आत्मनः स्वस्यगुणैःकृतसममनिसदृशम्

पृथाप्यनुश्रुत्यधनंजयोदितंनाशंयदूनांभगवद्गतिंचताम् एकांतभक्त्याभगवत्यधोक्षजेनिवेशितात्मोपरराम संसृतेः ३३ ययाऽहरद्भुवोभारंतां
तनुंविजहावजः कंटकंकंटकेनेवद्वयंचापीशितुःसमम् ३४ यथामत्स्यादिरूपाणि धत्तेजह्याद्यथानटः भूभारःक्षपितोयेनजहौतच्चकलेवरं ३५
यदामुकुंदोभगवानिमांमहींजहौस्वतन्वाश्रवणीयसत्कथः तदाहरेवाप्रतिबुद्धचेतसामधर्महेतुःकलिरन्ववर्तत ३६ युधिष्ठिरस्तत्परिसर्पणंबुधः
पुरेचराष्ट्रेचगृहेतदात्मनि विभाव्यलोभानृतजिह्महिंसनाद्यधर्मचक्रंगमनायपर्यधात् ३७ स्वराट्पौत्रंविनयिनमात्मनःकृतसमंगुणैः तोयनी
व्याःपतिंभूमेरभ्यषिंचद्गजाह्वये ३८ मथुरायांतथावज्रंशूरसेनपतिंततः प्राजापत्यांनिरूप्येष्टिमग्नीनपिबदीश्वरः ३९ विसृज्यतत्रतत्सर्वंदुकू-
लवलयादिकम् निर्ममोनिरहंकारःसंछिन्नाशेषबंधनः ४० वाचंजुहावमनसितत्प्राणइतरेचतम् मृत्यावपानंसोत्सर्गंतंपंचत्वेह्यजोहवीत् ४१
त्रित्वेहुत्वाथपंचत्वंतच्चैकत्वेऽजुहोन्मुनिः सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ४२ चीरवासानिराहारोबद्धवाङ्मुक्तमूर्द्धजः दर्शयन्नात्म-
नोरूपंजडोन्मत्तपिशाचवत् ४३ अनवेक्षमाणोनिरगादशृण्वन्बाधिरोयथा उदीचींप्रविवेशाशांगतपूर्वांमहात्मभिः हृदिब्रह्मपरंध्यायन्नाव
र्तेतयतोगतः ४४ सर्वेतमनुनिर्जग्मुर्भ्रातरःकृतनिश्चयाः कलिनाऽधर्ममित्रेणदृष्ट्वास्पृष्टाःप्रजाभुवि ४५

तोयंसर्वतः स्थितंसमुद्रोदकमेवनीवीपरि
धानविशेषोयस्याः तस्याभूमेःपतित्वेनाभिषिक्तवान् ३८ वज्रमनिरुद्धस्यपुत्रं निरूप्यकृत्वेत्यर्थः अपिबत् आत्मन्यारोपयामास ईश्वरःसमर्थः ३९ संछिन्नान्यशेषाणि
बंधनानि उपाधयोयेन ४० तदेवदर्शयतिद्वाभ्याम् वाचमित्युपलक्षणम् सर्वेंद्रियाणिमनसिप्रविलापितवानित्यर्थः तच्चमनःप्राणे प्राणाधीनवृत्तित्वात् तंचप्राण-
मितरे अपानेतेनाकर्षणात् अपानव्यापारउत्सर्गः तत्सहितमपानंमृत्यौतदधिष्ठातृदेवतायां अनेनैववागादिष्वपितत्तत्कर्मसाहित्यंज्ञेयम् तंमृत्युंपंचत्वेपंचभूतानामै-
क्ये देहे देहस्यैषमृत्युर्नात्मनइतिभावितवानित्यर्थः अजोहवीदितियङ्लुगंताल्लुङिरूपम् ४१ त्रित्वेगुणत्रये तच्चत्रित्वमेकत्वेअविद्यायाम् सर्वंसर्वारोपहेतुमविद्यामात्मनि
जीवे अजोहवीदितिवक्तव्ये अजुहवीदित्यार्षम् एवंशोधितमात्मानंब्रह्मणि अव्ययेकूटस्थे नतस्यान्यत्रलयइत्यर्थः ४२ तदेवमात्मप्रतिपत्तिमुक्त्वाबाह्यस्थितिमाह चीरवासाइति
द्वाभ्यां बद्धवाक्मौनी ४३ अनवेक्षमाणःअनुजादिप्रतीक्षामकुर्वन् आशांदिशम् गतपूर्वांपूर्वंप्रविष्टाम् यतःयांदिशम् ४४ अधर्मोमित्रंयस्यतेन ४५

साधुकृताः सर्वे अर्थाधर्मादयो यैः अतएव वैकुंठस्य चरणांबुजमेव आत्यंतिकं शरणं ज्ञात्वा ४६ तदिति ४७ कथंभूते पदे विधूतकल्मषाणामास्थानं निवासस्थानं यत्तस्मिन्विरजेना
मनं वगनिं प्रापुः ननु षोडशकलेन लिंगेन गतेर्वा विशेषणम् विरजेनात्म नैवावस्थानरूपा गतिम् ते विधूतकल्मषाः प्रापुरिति ४८ तीर्थान्यटन् प्रभासे श्रीकृष्णावेशेन कृष्णे चि
त्तमावेश्य देहं परित्यज्य तच्चित्तएवसन् तदानींनेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ४९ आत्मानं प्रति अनपेक्षतां तदा ज्ञात्वा तमाप ५० इति एवंयत्संप्रया
णम् अलमतिशयेन स्वस्त्ययनं मंगलास्पदम् अलंपवित्रं च ५१ इति प्रथमस्कंधे टीकायां पंचदशोऽध्यायः १५ ततश्च षोडशे भूमिधर्मयोः कलिरिवन्नयोः संवादे वर्ण्य
ते भूपा सिःपालकस्य परिक्षितः १ द्विजवर्याणां शिक्षया सूतां जन्मनि अभिजातकोविदाः जातकर्मविदः हे विप्र महतां गुणा यस्मिन्सः १ जनमेजयादीनित्यक्षराधिक्यं छांदसम् हे
तौ शतृप्रत्ययः सुतानुत्पादयितुमिरावतीमुपयेमे इति वाक्ययोजना २ आजहार कृतवानित्यर्थः शारद्वतं कृपम् यत्र येषु अश्वमेधेषु ३ निजग्राह निगृहीतवान् कलिमेव निर्दि

तेसाधुकृतसर्वार्था ज्ञात्वात्यंतिकमात्मनः मनसा धारयामासुर्वैकुंठचरणांबुजम् ४६ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे तस्मिन्नारा
यणपदे एकांतमतयो गतिम् ४७ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः विधूतकल्मषास्थानं विरजेनात्मनैव हि ४८ विदुरोपि परित्यज्य प्रभा
से देहमात्मवान् कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ४९ द्रौपदी च तदाज्ञाय पतीनामनपेक्षिताम् वासुदेवे भगवति ह्येकांतमतिराप तं ५०
यः श्रद्धयैतद्भगवत्प्रियाणां पांडोः सुतानामिति संप्रयाणम् शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ५१ इति श्रीमद्भा
गवते महापुराणे पांडवस्वर्गारोहणं नाम पंचदशोऽध्यायः १५ सूत उवाच ततः परीक्षिद्द्विजवर्यशिक्षया महीं महाभागवतः शशास ह यथा
हि सूत्यामभिजातकोविदाः समादिशन्विप्र महद्गुणस्तथा १ स उत्तरस्य तनयामुपयेम इरावतीम् जनमेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् २
आजहाराश्वमेधांस्त्रीन्गंगायां भूरिदक्षिणान् शारद्वतं गुरुं कृत्वा देवा यत्राक्षिगोचराः ३ निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् नृपलिंगध
रं शूद्रं घ्नंतं गोमिथुनं पदा ४ शौनक उवाच कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः नृदेवचिह्नधृक्शूद्रः कोसौ गां यः पदाहनत् ५
तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् अथवास्य पदांभोजमकरंदलिहां सताम् किमन्यैरसदालापैरायुषो यदसद्व्ययः ६ क्षुद्रायुषां नृणामंग
मर्त्यानामृतमिच्छताम् इहोपहूतो भगवान्मृत्युः शामित्रकर्मणि ७ न कश्चिन्म्रियते तावद्यावदास्त इहांतकः एतदर्थं हि भगवानाहूतः परम
र्षिभिः अहो नृलोके पीयेत हरिलीलामृतं वचः ८ मंदस्य मंदप्रज्ञस्य वयो मंदायुषश्च वै निद्रया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ९

शाति नृपेति ४ कस्य हेतोरिति अयमर्थः कलिं कस्माद्धेतोः केवलं
निजग्राह न तु हतवान् यतोऽसौ शूद्रः कः अतिकुत्सितः यो गां पदाहनत् अहन्निति ५ अस्य विष्णोः पदांभोजयोर्यो मकरंदः तं लिहंति आस्वादयंति ये तेषां सतां महतां वाक्
याश्रयमिति समासान्नि कृष्णस्यानुषंगः तर्हि कथ्यतां नो चेत्किमन्यैरसद्भिरालापैः यतस्तैः आयुषो व्यर्थक्षयः ६ अस्माकमयं सत्रप्रयत्नोपि हरिकथामृतपानार्थ एवेत्याह सार्धेन क्षु
द्रमल्पमायुर्येषां अतो मर्त्यानां मरणधर्मवतां तथापि ऋतं सत्यं मोक्षमिच्छतां यो मृत्युः स इह सत्रे शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः ७ ततः किमत आह न कश्चिदिति ततो
पि किमत आह अहो नृलोके हरिलीलामृतं वचः पीयेत सेव्यतां तदर्थं हरिलीलैवामृतं यस्मिन् तत् ८ तदभावे वृथैव जीवनमित्याह मंदस्य अलसस्य नक्तं रात्रौ यद्वयः आयुः तन्निद्रया ह्रि
यते दिवा अह्नि च यद्वयः तद्व्यर्थकर्मभिरपह्रियते ९

तत्रतावत्कलिनिग्रहप्रसंगमाह यदानिजचक्रवर्तितेस्वसेनयापालितेदेशे कलिंप्रविष्टंशुश्राव तदातामनतिप्रियांवार्तांकिंचित्प्रियांच युद्धकौतुकसंपत्तेः तांनिशम्य ततः शरास-
नं दुष्टनिग्रहार्थमाददे संयुगेशौंडिः युद्धेप्रगल्भः पाठांतरेयुद्धेशौरितुल्यः १० ततश्चदिग्विजयायनिर्गतः ११ भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानिवर्षाणि
मेरोः सर्वतः इलावृतम् ततउत्तरतोरम्यकंहिरण्मयंचदक्षिणतोहरिवर्षंकिंपुरुषंच तानिविजित्य १२ प्रगीयमानंयशः यशआदीनिशृण्वन्तेभ्योददावितितृतीयेनान्वयः
१३ १४ १५ किंच स्निग्धेषु पांडवेषुविष्णोर्यानि सारथ्यादीनि कर्माणितानिशृण्वन् तथाविष्णोः जगत्कर्तृकंप्रणातिंच शृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविंदे भक्तिंकरोति-
स्म पारषदमिति रेफषकारयोर्विश्लेषश्छांदसः तत्रपार्षदं सभापतित्वं सेवनंचित्तानुवृत्तिः वीरासनंरात्रौखड्गहस्तस्यातिष्ठतोजागरणं १६ वृत्तिमनुवर्तमानस्यसतः नाति
दूरे शीघ्रमेव १७ धर्मोवृषरूपः विच्छायांहतप्रभाम् गांगोरूपांपृथ्वीम् विवत्सांनष्टापत्याम् १८ तेआत्मनोदेहस्ययद्यपिव्याधिरामयोनलक्ष्यते तथापि अंतर्मध्ये आधिः पीडा-

सूतउवाच यदापरीक्षित्कुरुजांगलेवसन्कलिंप्रविष्टंनिजचक्रवर्तिते निशम्यवार्तामनतिप्रियांततः शरासनंसंयुगशौंडिराददे १० स्वलंकृ-
तश्यामतुरगयोजितरथंमृगेंद्रध्वजमाश्रितः पुरात् वृतोरथाश्वद्विपपत्तियुक्तयास्वसेनयादिग्विजयायनिर्गतः ११ भद्राश्वंकेतुमालंचभारतं
चोत्तरान्कुरून् किंपुरुषादीनिवर्षाणिविजित्यजगृहेबलिम् १२ तत्रतत्रोपशृण्वानः स्वपूर्वेषांमहात्मनाम् प्रगीयमानंचयशः कृष्णमाहात्म्यसू-
चकम् १३ आत्मानंचपरित्रातमश्वत्थाम्नोऽस्त्रतेजसः स्नेहंचवृष्णिपार्थानांतेषांभक्तिंचकेशवे १४ तेभ्यः परमसंतुष्टः प्रीत्युज्जृंभितलोचनः म-
हाधनानिवासांसिददौहारान्महामनाः १५ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामान् स्निग्धेषुपांडुषुजगत्प्रणतिंचविष्णो
र्भक्तिंकरोतिनृपतिश्चरणारविंदे १६ तस्यैवंवर्तमानस्यपूर्वेषांवृत्तिमन्वहम् नातिदूरेकिलाश्चर्यंयदासीत्तन्निबोधमे १७ धर्मः पदैकेनचरन्विच्छाया
मुपलभ्यगाम् पृच्छतिस्माश्रुवदनांविवत्सामिवमातरम् १८ कच्चिद्भद्रेऽनामयमात्मनस्तेविच्छायासिम्लायतेषन्मुखेन आलक्षयेभवतीमंतराधिंदूरे
बंधुंशोचसिकंचनांब १९ पादैर्न्यूनंशोचसिमैकपादमात्मानंवावृषलैर्भोक्ष्यमाणम् अथोसुरादीन्हृतयज्ञभागान्प्रजाउतस्विन्मघवत्यवर्षति २०
अरक्ष्यमाणाःस्त्रियउर्विबालान्शोचस्यथोपुरुषादैरिवार्त्तान् वाचंदेवींब्रह्मकुलेकुकर्मण्यब्रह्मण्येराजकुलेकुलाग्र्यान् २१ किंक्षत्रबंधून्कलिनो
पसृष्टान्राष्ट्राणिवातैरवरोपितानि इतस्ततोवाऽशनपानवासःस्नानव्यवायोन्मुखजीवलोकम् २२ यद्वांऽबतेभूरिभरावतारकृतावतारस्यहरेर्धरि
त्रि अंतर्हितस्यस्मरतीविसृष्टाकर्माणिनिर्वाणविलंबितानि २३

यस्यास्त्वांत्वामालक्षये केन यतोविच्छायासि अतईषत्म्लायता वैवर्ण्यंभजता मुखेनालिंगेन तत्रका
रणानिकल्पयन् पृच्छति दूरेबंधुमित्यादिपंचभिः दूरेस्थितंबंधुं १९ त्रिभिःपादैर्न्यूनमतएवैकपादम् मामांमल्लक्षणंजनमित्यर्थः वृषलैः इतऊर्ध्वंभोक्ष्यमाणं पुंस्त्वमात्मपदविशेषणत्वात्
हृतायज्ञभागायेषांतान् यज्ञाद्यकरणात् २० हेउर्विपृथ्वि भर्तृभिररक्ष्यमाणाःस्त्रियः पितृभिररक्ष्यमाणान्बालान् भक्ततैरेवपुरुषादैर्निर्दयैरिव आर्त्तानुक्लिष्टान् वाचंदेवींसरस्वतींकुक
र्माणिदुराचारेस्थितां कुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् २१ उपसृष्टान्व्याप्तान् अवरोपितानिउद्वासितानि व्यवायोमैथुनं इतस्ततः निषेधानादरेणसर्वतोऽशनादिषून्मुखं प्रवर्तमानंजीव
लोकंवा २२ हेअंबमातः हेधरित्रि तेतवयोभूरिभारः तस्यावतारणार्थंकृतावतारस्यकर्माणिस्मरंती तेनविसृष्टासतीशोचसि निर्वाणंविलंबितमाश्रितंयेषुतानि पाठांतरेनिर्वाणविडंबितं
उपहसितंयैः मोक्षादप्यधिकसुखानीत्यर्थः २३

हे अंब तेसौभाग्यं कालेनवाहृतम् २४ भवान्जानात्येव तथापिवक्ष्यामीत्याह येनहेतुभूतेनत्वं चतुर्भिः पादैर्वर्तसे यत्रचसत्यादयोमहागुणानक्षीयंते तेनश्रीनिवासेनरहितंलोकं शोचामीतिषड्भिरन्वयः २५ सत्यंयथार्थभाषणं शौचंशुद्धत्वं दयापरदुःखासहनं क्षांतिः क्रोधप्राप्तौचित्तसंयमनम् त्यागः अर्थिषुमुक्तहस्तता संतोषः अलंबुद्धिः आर्जवमवक्रता शमोमनसोनैश्चल्यम् दमोबाह्येंद्रियनैश्चल्यम् तपः स्वधर्मः साम्यमरिमित्राद्यभावः तितिक्षापरापराधसहनं उपरतिर्लाभप्राप्तावौदासीन्यम् श्रुतंशास्त्रविचारः २६ ज्ञानमात्मविषयम् विरक्तिर्वैतृष्ण्यम् ऐश्वर्यंनियंतृत्वं शौर्यंसंग्रामोत्साहः तेजः प्रभावः बलंदक्षत्वं स्मृतिः कर्तव्यार्थानुसंधानम् स्वातंत्र्यमपराधीनता कौशलंक्रियानिपुणता कांतिः सौंदर्यम् धैर्यमव्याकुलता मार्दवंचित्ताकाठिण्यम् २७ प्रागल्भ्यं प्रतिभातिशयः प्रश्रयोविनयः शीलंसुस्वभावः सहओजोबलानि मनसः ज्ञानेंद्रियाणांकर्मेंद्रियाणांचपाटवानि भगः भोगास्पदत्वम् गांभीर्यमक्षोभ्यम् स्थैर्यमचंचलता आस्तिक्यंश्रद्धा कीर्तिर्यशः मानः पूज्यत्वम् अनहंकृतिः गर्वाभावः २८ एते एकोनचत्वारिंशत् अन्येचब्रह्मण्यत्वशरण्यत्वादयो-महांतोगुणायस्मिन्नित्याः सहजाः नवियंति नक्षियंतेस्म २९ तेनगुणपात्रेणगुणालयेनपाप्मनापापहेतुना ३० ३१ तस्यविरहोदुःसहइत्याहचतुर्भिः ब्रह्मादयोयस्याः श्रियः अपां-

इदंममाचक्ष्वतवाधिमूलंवसुंधरेयेनविकर्शितासि कालेनवातेबलिनांबलीयसासुरार्चितंकिंहृतमंबसौभगम् २४ धरण्युवाच भवान्हिवेदतत्सर्वं यन्मांधर्मानुपृच्छसि चतुर्भिर्वर्तसेयेनपादैर्लोकसुखावहैः २५ सत्यंशौचंदयाक्षांतिस्त्यागःसंतोषआर्जवम् शमोदमस्तपःसाम्यं तितिक्षोपरतिःश्रुतम् २६ ज्ञानंविरक्तिरैश्वर्यंशौर्यंतेजोबलंस्मृतिः स्वातंत्र्यंकौशलंकांतिर्धैर्यंमार्दवमेवच २७ प्रागल्भ्यंप्रश्रयःशीलंसहओजोबलं भगः गांभीर्यंस्थैर्यमास्तिक्यंकीर्तिर्मानोऽनहंकृतिः २८ एतेचान्येचभगवन्नित्यायत्रमहागुणाः प्रार्थ्यामहत्त्वमिच्छद्भिर्नवियंतिस्मकर्हिचित् २९ तेनाहंगुणपात्रेणश्रीनिवासेनसांप्रतम् शोचामिरहितंलोकंपाप्मनाकलिनेक्षितम् ३० आत्मानंचानुशोचामिभवंतंचामरोत्तमम् देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान् ३१ ब्रह्मादयोबहुतिथंयदपांगमोक्षकामास्तपःसमचरन्भगवत्प्रपन्नाः साश्रीःस्ववासमरविंदवनंविहाययत्पादसौभगमलंभजतेनुरक्ता ३२ तस्याहमब्जकुलिशांकुशकेतुकेतैःश्रीमत्पदैर्भगवतःसमलंकृतांगी त्रीनत्यरोचउपलभ्यततोविभूतिंलोकान्समांव्यसृजदुत्स्मयतींतदंते ३३ योवैममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः त्वांदुःस्थमूनपदमात्मनिपौरुषेणसंपादयन्यदुषुरम्यमबिभ्रदंगम् ३४ कावासहेतविरहंपुरुषोत्तमस्यप्रेमावलोकरुचिरस्मितवल्गुजल्पैः स्थैर्यंसमानमहरन्मधुमानिनीनांरोमोत्सवोममयदंघ्रिविटंकितायाः ३५

गमोक्षः स्वस्मिन् दृष्टिपातः तत्कामाः संतः बहुतिथंबहुकालंतपः समचरन् सम्यक्चरंतिस्म भगवद्भिरुक्तैर्मैः प्रपन्ना आश्रिता अपि साश्रीः यस्यपादलावण्यमलमनुरक्तासती सेवते ३२ तस्यभगवतः श्रीमद्भिः पदैः केतुर्ध्वजः अब्जादयः केताश्चिह्नानि येषांतैः यदा अब्जादीनामाश्रयैः सम्यगलंकृतमंगंयस्याः साहम् ततोभगवतोविभूतिंसंपदमुपलभ्य प्राप्य त्रीन्लोकान् अतिक्रम्य अरोचेशोभितवत्यस्मि पश्चात्तस्याविभूतेरंतेनाशकाले प्राप्तेसति उत्स्मयतींगर्वंकुर्वाणांमांसव्यसृजत्त्यक्तवान् ३३ किंच यो वै असुरवंशीयेषांनृपाणामक्षौहिणीशतरूपंममातिभरंभारमपनीतवान् त्वांच ऊनपदत्वाद्दुःस्थंसंतंपौरुषेणपुरुषकारेण आत्मनिस्वस्मिन्संपूर्णपदंसुस्थंसंपादयन् लक्षणहेत्वोः क्रियायाइति हेतौशतृप्रत्ययः संपादयितुमित्यर्थः अबिभ्रत्धृतवानित्यर्थः ३४ तस्यविरहंकावासहेत प्रेमावलोकश्चरुचिरस्मितंचवल्गुजल्पश्चतैः मधुमानिनीनांसत्यभामादीनां समानंगर्वसहितंस्थैर्यंस्वस्थत्वंयः अहरत् यस्यांघ्रिणारजस्सुस्थितेनविटंकितायाः अलंकृतायाः सस्यादिमिषेणरोमोत्सवोभवति ३५

कथयतोः सतोः प्राचीं पूर्ववाहिनीं कुरुक्षेत्रे ३६ इति प्रथमस्कंधे टीकायां षोडशोऽध्यायः १६ ततः सप्तदशे राज्ञा कलेर्निग्रह उच्यते तस्यैवं वीर्यभाजोपि वैराग्यं वक्तुम- द्भुतम् १ हन्यमानं ताड्यमानं १ मृणालं पद्मकंदः तद्वत्तु धवलम् भयान्मेहंतं मूत्रयंतं इवेत्यनेन पादावशेषो धर्मो भयान्मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशः तस्याप्यनिर्वा- हात्कंपमान इवेति दर्शितम् २ धर्मदुघां हविर्दोग्ध्रीम् क्षामां कृशाम् यवसं तृणम् अत्र सस्यादिप्रसवक्षयादिव त्सेव यज्ञाद्यभावात् कृशा अत एव यज्ञभागमिच्छंती पृथ्वीति सूचितम् ३ कार्तस्वरं सुवर्णं तत्कृतः परिच्छदः परिकरो यस्य स्वर्णनिबद्धमित्यर्थः सज्जीकृतकार्मुकः ४ हंसि घातयसि राजाहमिति चेत्तत्राह नट इव वेषमात्रेण नरदेवोसि क- र्मणा तु अद्विजः शूद्रः ५ अशोच्यान्निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽसि अतो वधमर्हसि ६ वृषं प्रत्याह त्वं वाकः स्वयमेव संभावयति किंकश्चिद्देवो- वृषरूपेणास्मान् परिखेदयन् वर्तसे ७ दोर्दंडैः परिरंभिते विधिवत्कृतरक्षिते तेऽमुत्र अश्रूणि विना अन्येषामश्रूणि नानुपतंतीति खेदहेतुत्वं दर्शितम् ८ एवमुक्ते पुनरपि शोचंतं

तयोरेवं कथयतोः पृथिवी धर्मयोस्तदा परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ३६ इति श्रीभागवते महापुराणे प्रथमस्कंधे पृथ्वीधर्मसंवा- दो नाम षोडशोऽध्यायः १६ सूत उवाच तत्र गोमिथुनं राजा हन्यमानमनाथवत् दंडहस्तं च वृषलं ददृशे नृपलांछनम् १ वृषं मृणालध- वलं मेहंतमिव बिभ्यतम् वेपमानं पदैकेन सीदंतं शूद्रताडितं २ गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् विवत्सां साश्रुवदनां क्षामां यवसमिच्छती- म् ३ पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम् मेघगंभीरया वाचा समारोपितकार्मुकः ४ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली नरदेवोसि वेषेण नटवत्कर्मणाऽद्विजः ५ कस्त्वं कृष्णे गते दूरं सह गांडीवधन्वना शोच्योऽस्यशोच्यान् रहसि प्रहरन्वधमर्हसि ६ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ७ न जातु कौरवेंद्राणां दोर्दंडपरिरंभिते भूतलेऽनुपतंत्यस्मिन्विना ते प्राणिनां शुचः ८ मा सौरभेया- नुशुचो व्येतु ते वृषलाद्भयम् मा रोदीरंब भद्रं ते खलानां मयि शास्तरि ९ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यंते साध्व्यसाधुभिः तस्य मत्तस्य नश्यंति कीर्तिरा- युर्भगो गतिः १० एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ११ कोऽवृश्चत्तव पादांस्त्रीन् सौरभेय चतुष्पद मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् १२ आख्याहि वृष भद्रं वः साधूनामकृतागसाम् आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् १३ जनेऽनागस्य- घं युंजन्सर्वतोऽस्य च मद्भयम् १३ अनागःस्विह भूतेषु य आगस्कृन्निरंकुशः आहर्तास्मि भुजं साक्षादमर्त्यस्यापि सांगदम् १४ राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम् शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह १५

प्रत्याह भोः करभेः पुत्र मा शुचः शोकं मा कुरु व्येतु अपयातु गां प्रत्याह अंब मातः शास्त- रि मयि जीवति सति ते भद्रमेव अतो मा रोदीः ९ मद्धितार्थमेवैनं हनिष्यामि न तवोपकारायेत्याह यस्येति द्वाभ्यां हे साध्वि सर्वाः याः काश्चिदपीत्यर्थः असाधुभिः त्रस्यंते पीड्यंत इ- त्यर्थः भगो भाग्यं गतिः परलोकः १० ११ पुनरपि शोचंतं वृषं प्रत्याह कः अवृश्चत् चिच्छेद त्वादृशाः त्वद्विधाः दुःखिताः १२ वो भद्रमस्तु आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवंतम् कीर्तिं दूषयतीति तथा तमाख्याहि ननु तदाख्याने कृते कथं भद्रं स्यादित्यत आह यस्मादनागसि जने यः अघं दुःखं युंजन् कुर्वन् भवति अस्य एवंभूतस्य मत्तः सकाशात् सर्वत्रापि भयं भवति ततः साधूनां भद्रं भवेदेवेति १३ एतस्य दंडे अहमसमर्थ इति माशंकीरित्याह अनागःस्विति आगस्कृत् अपराधकर्ता तस्यामर्त्यस्य देवस्यापि भुजमाहर्तास्मि आहरिष्यामि सांगदमित्यनेन मूलत उत्पाट्याहरिष्यामीति दर्शितं १४ नन्वेकस्य निग्रहेणान्यस्यानुग्रहे तव किं प्रयोजनं तत्राह राज्ञो हीति अन्यान् अधर्मिष्ठान् शासतः दंडयतः १५ ७

आर्तानामभयंयस्मात्तद्वचोवायुष्माकंयुक्तमुचितमेव १६ वयंतुयतःपुरुषात्प्राणिनांक्लेशहेतवोभवेयुःतंपुरुषंनविजानीमः यतःवादिनांवाक्यभेदैर्विमोहिताः १७ वाक्यभे
दानेवाह विकल्पभेदंवसंतेआच्छादयंतियेयोगिनः तेआत्मानमेवात्मनःप्रभुंसुखदुःखप्रदमाहुः तदुक्तं आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनइति यद्वा विकल्पैःकुतर्कैःप्राह्
ताःनास्तिकाः एवंहितेवदंति नतावद्देवतादीनांप्रभुत्वं कर्माधीनत्वात् नचकर्मणःस्वाधीनत्वात् अतःस्वयमेवप्रभुर्नचान्यःकश्चिदिति अन्येदैवज्ञाः दैवंग्रहादिरूपांदेवताम् परे
तुमीमांसकाः कर्म अपरेलोकायतिकाःस्वभावम् १८ केषापिसंस्येरेषुमध्येकेषपीति दुर्लभत्वंदर्शितम् निश्चयइतिसिद्धांतत्वम् अप्रतर्क्यात् मनोगोचरादनिर्देश्यात् वच
नागोचरात्परमेश्वरात्सर्वंभवतीतिविमृशाविचार्य स्वबुध्या १९ विखेदःगतमोहः पर्यचष्टत प्रत्यभाषत ज्ञातवानितिवा २० अनिर्धारितमिवब्रुवन् घातकंजानन्नपिनसू
चयेदित्येवंरूपंधर्मंब्रवीषि अतोधर्मोसि सूचनेकोदोषइत्यतआह यदिति स्थानंनरकादि २१ यद्वा अज्ञानादप्यकथनंभवतीत्याह अथवेति देवस्यमायायागतिर्वध्यघातक-

धर्मउवाच  एतद्वःपांडवेयानांयुक्तमार्ताभयंवचः येषांगुणगणैःकृष्णोदौत्यादौभगवान्कृतः १६ नवयंक्लेशबीजानियतःस्युःपुरुषर्षभ पुरु
षंतंविजानीमोवाक्यभेदविमोहिताः १७ केचिद्विकल्पवसनाआहुरात्मानमात्मनः दैवमन्येपरेकर्मस्वभावमपरेप्रभुम् १८ अप्रतर्क्यादनिर्देश्या
दितिकेष्वपिनिश्चयः अत्रानुरूपंराजर्षेविमृशस्वमनीषया १९ एवंधर्मेप्रवदतिससम्राड्द्विजसत्तम समाहितेनमनसाविखेदःपर्यचष्टत २०
धर्मंब्रवीषिधर्मज्ञधर्मोसिवृषरूपधृक् यदधर्मकृतःस्थानंसूचकस्यापितद्भवेत् २१ अथवादेवमायायानूनंगतिरगोचरा चेतसोवचसश्चापिभू
तानामितिनिश्चयः २२ तपःशौचंदयासत्यमितिपादाःप्रकीर्तिताः अधर्मांशैस्त्रयोभग्नाःस्मयसंगमदैस्तव २३ इदानींधर्मपादस्तेसत्यंनिर्वर्तये
द्यतः तंजिघृक्षत्यधर्मोयमनृतेनैधितःकलिः २४ इयंचभूर्भगवतान्यासितोरुभरासती श्रीमद्भिस्तत्पदन्यासैःसर्वतःकृतकौतुका २५ शोचत्य
श्रुकलासाध्वीदुर्भगेवोज्झिताधुना अब्रह्मण्यानृपव्याजाःशूद्राभोक्ष्यंतिमामिति २६ इतिधर्मंमहींचैवसांत्वयित्वामहारथः निशातमाददेखड्गं
कलयेधर्महेतवे २७ तंजिघांसुमभिप्रेत्यविहायनृपलांछनम् तत्पादमूलंशिरसासमगाद्भयविह्वलः २८ पतितंपादयोर्वीरःकृपयादीनवत्स
लः शरण्योनावधीच्छ्लोक्यआहचेदंहसन्निव २९ राजोवाच  नतेगुडाकेशयशोधराणांबद्धांजलेर्वैभयमस्तिकिंचित् नवर्तितव्यंभवता
कथंचनक्षेत्रेमदीयेत्वमधर्मबंधुः ३०

लक्षणाद्वानिश्चितानांचेतसोवचसश्चागोचरासा ज्ञेयानभवतीतिनिश्चयः २२ धर्मोसावितिज्ञात्वातस्यपादानुवादेनव्यवस्थामाह तप
इतिद्वाभ्यां अधर्मपादैस्तवत्रयःपादास्त्रिभिरंशैर्भग्नाःस्मयोविस्मयः २३ इदानींकलौहेधर्म तेपादःचतुर्थोंशः तत्रापिसत्यमेवास्ति यतःसत्यात्भवाना त्मानंनिर्वर्तयेत् कथंचिद्धारये
त् यद्वा पुरुषस्त्वांसाधयेत् तमपिपादमनृतेनसंवर्धितःकलिरूपायमधर्मोग्रहीतुमिच्छति तत्रेयंस्थितिः कृतयुगेप्रथमंसंपूर्णश्चतुष्पाद्धर्मः त्रेतायांचतुर्थमपिपादानांमध्येस्मयेनतपः
संगेनशौचं मदेनदया अनृतेनसत्यमिति एवंचतुर्थांशोहीयते द्वापरेधर्मे कलौचतुर्थांशोवशिष्यते सोपिअंतेनंक्ष्यतीति २४ न्यासितःअन्योन्यद्वारेणावतारितःऊरुर्भरोभारोयस्याःकृ
तकौतुकंमंगलंयस्याःसा २५ अश्रूणिकलयतिमुंचतीत्यश्रुकला तेनत्यक्तासतीशूद्रामोक्ष्यंतिमामितिशोचति २६ निशातंनिशितं अधर्मस्यहेतुर्यःकलिस्तंहंतुमित्यर्थः २७ अभिप्रेत्यज्ञा
त्वा २८ शरण्यःआश्रयार्हः श्लोक्यःसत्कीर्त्यर्हः २९ गुडाकेशोऽर्जुनः तस्ययशोधरायेवयंतेषां तान्प्रतिबद्धांजलिर्येननतस्यते किंतु कथंचनकेनाप्यंशेननवर्तितव्यं यस्मात्त्वमधर्मस्यबंधुः ३०

नदेवाह राजदेहेषुवर्त्तमानं त्वामनुसर्वतः प्रवृत्तः अनार्यंदौर्जन्यं अंहः स्वधर्मत्यागः ज्येष्ठा अलक्ष्मीः मायाकपटं ३१ नतस्माद्वर्तितव्ये वर्तितुमर्हेब्रह्मावर्तेदेशे यज्ञस्यवितानंविस्ता-
रः तत्रविज्ञाः निपुणाः ३२ इज्यायागस्तद्रूपामूर्तिर्यस्यशंक्षेमं कामांश्च नान्विंद्रादयोदेवाइज्यंतेनतुहरिस्तत्राह एषः स्थावरादीनामात्मेति तथापिजीववन्नपरिच्छिन्नइत्याह
अंतर्बहिरिति यथावायुः प्राणरूपेणांतस्थोऽपिवहिरप्यस्ति तद्वत्सर्वांतर्यामीश्वरोपीति ३३ उद्यतासिमुद्यतखड्गं दंडपाणियमम् उद्यत मुद्यतम् ३४ अत्रनवस्तव्यमितियात
वाज्ञा तथायत्रक्वापिवत्स्यामि किंतु तत्रतत्रापि आत्तः गृहीतः इषुः शरासनंचयेनतंत्वामेवलक्षये ३५ तत्तस्मान्नियतो निश्चलोवत्स्यामि ३६ पानंमद्यादेः सूनाः प्राणिवधाः
द्यूते अनृतम् पानेमदः पूर्वंमदादयानाशकत्वेनोक्तः अत्रतुगर्वद्वारातपोनाशकत्वेन स्त्रीषुसंगः हिंसायांक्रौर्यंदयानाशकमितिज्ञेयम् यद्यपिसर्वसर्वत्रसंभवति तथापिप्राधा-
न्येनानृतादीनां द्यूतादिषुयथासंख्यंज्ञेयम् प्रदशस्कंधेतुसत्यंदयातपोदानमितिपादाविभोर्नृपइत्यत्रदानशब्देनशौचमेवोक्तं मनः शुद्धिरूपत्वाद्भूताभयदानस्य त्रेतायांधर्म-

त्वांवर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः लोभोऽनृतं चौर्यमनार्यमंहोज्येष्ठाचमायाकलहश्चदंभः ३१ नवर्तितव्यंतदधर्मबंधो धर्मेणस-
त्येनचवर्तितव्ये ब्रह्मावर्तेयत्रयजंतियज्ञैर्यज्ञेश्वरंयज्ञवितानविज्ञाः ३२ यस्मिन्हरिर्भगवानिज्यमानइज्यात्मूर्तिर्यजतांशंतनोति कामानमोघा
न्स्थिरजंगमानामंतर्बहिर्वायुरिवैषआत्मा ३३ सूतउवाच परीक्षितैवमादिष्टः सकलिर्जातवेपथुः तमुद्यतासिमाहेदंदंडपाणिमिवो
द्यतम् ३४ यत्रक्वचनवत्स्यामिसार्वभौमतवाज्ञया लक्षयेतत्रतत्रापित्वामात्तेषुशरासनम् ३५ तन्मेधर्मभृतांश्रेष्ठस्थानंनिर्देष्टुमर्हसि यत्रैवनि
यतोवत्स्ये आतिष्ठंस्तेऽनुशासनम् ३६ सूतउवाच अभ्यर्थितस्तदातस्मै स्थानानिकलयेददौ द्यूतंपानंस्त्रियः सूनायत्राधर्मश्चतुर्विधः ३७
पुनश्चयाचमानाय जातरूपमदात्प्रभुः ततोऽनृतंमदंकामंरजोवैरंचपंचमम् ३८ अमूनिपंचस्थानानिह्यधर्मप्रभवः कलिः औत्तरेयेणदत्तानिन्यव
सत्तन्निदेशकृत् ३९ अथैतानिनसेवेतबुभूषुः पुरुषः क्वचित् विशेषतोधर्मशीलोराजालोकपतिर्गुरुः ४० वृषस्यनष्टांस्त्रीन्पादांस्तपः शौचंदया-
मिति प्रतिसंदधआश्वास्यमहींचसमवर्धयत् ४१ सएषएतर्ह्यध्यास्तेआसनंपार्थिवोचितम् पितामहेनोपन्यस्तंराज्ञारण्यंविविक्षता ४२ आ
स्तेधुनासराजर्षिः कौरवेंद्रश्रियोल्लसन् गजाह्वयेमहाभागश्चक्रवर्तीबृहच्छ्रवाः ४३ इत्थंभूतानुभावोयमभिमन्युसुतोनृपः यस्यपालयतः क्षो
णींयूयंसत्रायदीक्षिताः ४४ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेकलिनिग्रहोनामसप्तदशोऽध्यायः १७

पादानांतुर्यांशोहीयतेशनैः अध-
र्मपादैरनृतहिंसाऽसंतोषविग्रहैरित्यत्रच असंतोषशब्देनतस्यहेतुर्गर्वोलक्ष्यते विग्रहशब्देनचतद्धेतुः स्त्रीसंगइत्यविरोधः ३७ चतुर्विधस्याप्येकत्रैवावस्थानंदेहीतिपुनर्याच
मानायजातरूपंसुवर्णंदत्तवान् ततः सुवर्णदानात् अनृतंमदं काममितिस्त्रीषुसंगम् रजइतिरजोमूलांहिंसाम् एतानिचत्वारिपंचमंवैरंचादादिति ३८ औत्तरेयेणपरिक्षिता
अमूनिअमूषुस्थानेषुन्यवसदित्यर्थः ३९ अथइतिहेतोः बुभूषुः उद्भवितुमिच्छुः स्त्रीसुवर्णयोरसेवनंनामतयोरनासक्तिः ४० एवंकलिंनिगृह्यवृषस्यपादान्प्रतिसंदधे तपआ
दीनिप्रवर्तितवानित्यर्थः ४१ सुष्मंदीयसत्रप्रवृत्तिरापितत्प्रभावादेवेत्याह त्रिभिः एतर्हिइदानींयुधिष्ठिरेणारण्यंप्रवेष्टुमिच्छताउपन्यस्तंसमर्पितमासनमध्यास्ते ४२ अधुनासांप्रत
मास्ते पालयतइतिवर्तमानसामीप्येवर्तमानवन्निर्देशः स्मेत्यध्याहारोवा ४३ सत्रायसत्रंकर्तुंदीक्षिताः दीक्षांकृतवंतः ४४ इतिप्रथमेटीकायांसप्तदशोऽध्यायः १७ ७२

राजस्त्वष्टादशेतस्य ब्रह्मशापोनिरूप्यते सचानुग्रहएवास्य जातोवैराग्यमावहन् १ परिक्षितोनिर्याणमत्याश्चर्यंवक्तुंतत्संभावनाय जन्माश्चर्यमनुस्मारयति योवाइति विप्लुष्टोनि
दग्धःसन् १ ब्रह्मकोपादुत्थितात्तक्षकाद्यः प्राणविप्लवः प्राणनाशः तस्माद्यदुरुभयंतस्मान्नसंमुमोह तत्रहेतुः यस्माद्भगवत्येवार्पिताशयइति २ किंतु उत्सृज्येति वैयासकेःशुकस्य
शिष्यःसन् विज्ञाता अजितस्यहरेः संस्थितिस्तत्त्वंयेनसः ३ नचैतच्चित्रमित्याह उत्तमश्लोकस्यैववार्तायेषु अतएवनित्यंतत्कथारूपममृतंजुषतांसंभ्रमोनस्यात् ४ तस्मिन्रा
ज्ञिकृतरांतन्नचित्रमित्याशयेनाह तावदिति अभिमन्योःपुत्रः एकराट्चक्रवर्ती ईशःपतिःयावत् ५ ननुतदाकलेरप्रवेशएवास्तुप्रविष्टोपिनप्राभवदिति कुतस्तत्राह यस्मिन्न
हनियर्हि यस्मिन्नेवक्षणे गांपृथ्वीं अनुवृत्तः प्रविष्टःअधर्मस्यप्रभवोयस्मिन् ६ नन्वधर्महेतुं कलिंसर्वथाकिंनहतवांस्तत्राह नानुद्वेष्टीति सारंगोभ्रमरइवसारग्राही सारमा
ह यद्यस्मिन्कुशलानिपुण्यानि आशुसंकल्पमात्रेणफलंति इतराणिपापानि आशुनसिध्यंति यतस्तानिकृतान्येवसिध्यंति नतुसंकल्पितमात्राणिइति ७ ननुदोषाधिक्याद्द्वेष
एवयुक्तःन धीरेषुतस्याकिंचित्करत्वादित्याह किंत्विति किंतुतेनभवेत् बालेषुअधीरेषु अप्रमत्तःअवहितःसन् योवृकइववर्तते ८ पारिक्षितमाख्यानम् अपृच्छतएवंतोयू

सूतउवाच — योवैद्रौण्यस्त्रविप्लुष्टोनमातुरुदरेमृतः अनुग्रहाद्भगवतःकृष्णस्याद्भुतकर्मणः १ ब्रह्मकोपोत्थिताद्यस्तुतक्षकात्प्राणविप्लवात्
नसंमुमोहोरुभयाद्भगवत्यर्पिताशयः २ उत्सृज्यसर्वतःसंगंविज्ञाताजितसंस्थितिः वैयासकेर्जहौशिष्योगंगायांस्वकलेवरम् ३ नोत्तमश्लोक-
वार्तानांजुषतांतत्कथामृतम् स्यात्संभ्रमोंऽतकालेपिस्मरतांतत्पदांबुजम् ४ तावत्कलिर्नप्रभवेत्प्रविष्टोपीहसर्वतः यावदीशोमहानुर्व्यामाभिम-
न्यवएकराट् ५ यस्मिन्नहनियर्ह्येवभगवानुत्ससर्जगाम् तदैवेहानुवृत्तोऽसावधर्मप्रभवःकलिः ६ नानुद्वेष्टिकलिंसम्राट्सारंगइवसारभुक् कु
शलान्याशुसिध्यंतिनेतराणिकृतानियत् ७ किंनुबालेषुशूरेणकलिनाधीरभीरुणा अप्रमत्तःप्रमत्तेषुयोवृकोनृषुवर्तते ८ उपवर्णितमेत
द्वःपुण्यंपारिक्षितंमया वासुदेवकथोपेतमाख्यानंयदपृच्छत ९ यायाःकथाभगवतःकथनीयोरुकर्मणः गुणकर्माश्रयाःपुंभिःसंसेव्यास्ताबुभू-
षुभिः १० ऋषयऊचुः सूतजीवसमाःसौम्यशाश्वतीर्विशदंयशः यस्त्वंशंससिकृष्णस्यमर्त्यानाममृतंहिनः ११ कर्मण्यस्मिन्ननाश्वासेधूम-
धूम्रात्मनांभवान् आपाययतिगोविंदपादपद्मासवंमधु १२ तुलयामलवेनापिनस्वर्गंनापुनर्भवम् भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः १३ को
नामतृप्येद्रसवित्कथायांमहत्तमैकांतपरायणस्य नांतंगुणानामगुणस्यजग्मुर्योगेश्वरायेभवपाद्ममुख्याः १४

यं ९ किंबहुनानरैरेतावदेवकर्तव्यमितिसर्वशा-
स्त्रार्थसारंकथयति यायाइति कथनीयान्युरूणिकर्माणियस्यतस्यगुणकर्मविषयाःबुभूषुभिःसद्भावमिच्छद्भिः १० पुनर्विस्तरेणकथनार्थंसूतोक्तिंतत्संगंचाभिनंदंति सूतेतित्रिभिः शाश्व
तीःसमाः अनंतान्वत्सरान्जीव अत्यंतसंयोगेद्वितीया विशुद्धंयशःकीर्तयसि तच्चास्माकंमर्त्यानाममृतंमरणनिवर्तकं ११ किंच अस्मिन्कर्मणिसत्त्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहु
ल्येनफलनिश्चयाभावात् धूमेनधूम्रःविवर्णआत्मा शरीरंयेषांतानस्मान् कर्मणिषष्ठी आसवंमकरंदं मधुमधुरं १२ भगवत्संगिनोविष्णुभक्ताः तेषांसंगस्ययोलवःअत्यल्पकःकालःतेनापिस्वर्गंनतुलयाम समंनपश्याम नचापवर्गं संभावनायांलोट् मर्त्यानांतुच्छाआशिषोराज्याद्यानतुलयामेतिकिमुवक्तव्यम् १३ एवंसत्संगमभिनंद्यश्रवणोत्कंठ्यमाविष्कुर्वंति कोनामे
ति रसविद्रसज्ञः महत्तमानामेकांतेनपरमयनमाश्रयोयः तस्यकथायां अगुणस्य प्राकृतगुणरहितस्य कल्याणगुणानामंतंयेयोगेश्वरास्तेऽपिनजग्मुः एतावंतइतिनपरिगणयांचक्रुः भवः
शिवःपाद्मोब्रह्माचमुख्योयेषांते १४

नोऽस्माकंमध्ये भगवान्प्रधानं सेव्योयस्य सभवान् नः सुश्रूषतां हरेश्चरितंविस्तारयतु १५ तच्च शुकपरिक्षित्संवादेनकथयेत्याहुः सवाइतिद्वाभ्यां वैयासकिनाशब्दितेनकथितेनयेनज्ञानेन ज्ञानसाधनेन अपवर्गइत्याख्यायस्यतत् खगेंद्रध्वजस्य हरेः पादमूलंभेजे १६ तत् असंवृतार्थंयथातथा आख्याहि तदेवनिर्दिशति परिक्षितेकथितंपारिक्षितंआख्यानंश्रीभागवतंपुराणं परंपुण्यंसत्वशोधकं अत्यद्भुतेयोगेनिष्ठायस्य अनंतस्याचरितैरुपपन्नंयुक्तम् अतएवभागवतानामभिरामंप्रियम् एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वंदर्शितम् १७ श्रीभागवतव्याख्याने लब्धप्रसंगंमहतामादरपात्रमात्मानंश्लाघतेद्वाभ्याम् अहोइत्याश्चर्येयद्वाइतिहर्षे वयमितिबहुवचनंश्लाघायां प्रतिलोमजा अपिअद्यजन्मभृतः सफलजन्मानः आस्म जाताः वृद्धानामनुवृत्त्या आदरेण ज्ञानवृद्धः शुकः तस्यसेवयेतिवा यतोदुष्कुलत्वेतन्निमित्तमाधिंच मनःपीडांमहत्तमानामभिधानयोगः लौकिकोपिसंभाषणलक्षणःसंबंधः विधुनोति अपनयति १८ कुतःपुनः किंपुनर्वक्तव्यंतस्या नंतस्यनामगृणतः पुंसोमहत्तमानामभिधानयोगोदौष्कुल्यंविधु-

तन्नोभवान्वै भगवत्प्रधानोमहत्तमैकांतपरायणस्य हरेरुदाराचरितंविशुद्धं सुश्रूषतांनोवितनोतुविद्वन् १५ सवैमहाभागवतःपरीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ज्ञानेनवैयासकिशब्दितेनभेजेखगेंद्रध्वजपादमूलम् १६ तन्नःपरंपुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् आख्याह्यनंताचरितोपपन्नंपारिक्षितंभागवताभिरामम् १७ सूतउवाच अहोवयंजन्मभृतोऽद्यहास्म वृद्धानुवृत्त्यापिविलोमजाताः दौष्कुल्यमाधिंविधुनोतिशीघ्रंमहत्तमानामभिधानयोगः १८ कुतःपुनर्गृणतोनामतस्यमहत्तमैकांतपरायणस्य योऽनंतशक्तिर्भगवाननंतोमहद्गुणत्वाद्यमनंतमाहुः १९ एतावतालंननुसूचितेनगुणैरसाम्यानतिशायनस्य हित्वेतरान्प्रार्थयतोविभूतिर्यस्यांघ्रिरेणुंजुषतेऽनभीप्सोः २० अथापियत्पादनखावसृष्टंजगद्विरिंचोपहृतार्हणांभः सेशंपुनात्यन्यतमोमुकुंदात्कोनामलोकेभगवत्पदार्थः २१ यत्रानुरक्ताःसहसैवधीराव्यपोह्यदेहादिषुसंगमूढम् व्रजंतितत्पारमहंस्यमंत्यंयस्मिन्नहिंसोपशमःस्वधर्मः २२ अहंहिपृष्टोऽर्यमणोभवद्भिराचक्षआत्मावगमोऽत्रयावान् नभःपतंत्यात्मसमंपतत्त्रिणस्तथासमंविष्णुगतिंविपश्चितः २३ एकदाधनुरुद्यम्यविचरन्मृगयांवने मृगाननुगतःश्रांतःक्षुधितस्तृषितोभृशम् २४

नोतीति यद्वा नामगृणतः पुनर्दौष्कुल्यमिति यद्वा गृणतःपुंसः तस्यनामदौष्कुल्यंविधुनोतीति किंवक्तव्यमिति कैमुत्यन्यायमेवाह अनंताःशक्तयोयस्य स्वतोऽप्यनंतः किंच महांतःगुणायस्य समहद्गुणः तस्यभावः तस्मात् यंगुणतोऽप्यनंतमाहुः १९ एतत्प्रपंचयतित्रिभिः एतावतेति तस्ययदसाम्यमनतिशायनंच गुणैस्तत्साम्यंतदाधिक्यंचान्यस्यनास्तीत्यस्यार्थस्यज्ञानेएतावतासूचितेन अलंपर्याप्तम् कस्तद्विस्तरतोवक्तुंशक्नोति तदेवाह इतरान्ब्रह्मादीन्प्रार्थयमानान् हित्वाविभूतिर्लक्ष्मीः अनभीप्सोऽपियस्यांघ्रिरेणुंसेवतइति २० अथेत्यर्थांतरे यस्यपादनखावसृष्टंनिःसृतमपिविरंच्येनोपहृतंसमर्पितमर्हणांभः अर्घोदकमीशसहितंजगत्पुनाति विरंच्योपहृतंसेशमितिचनयोरप्युपासकत्वसुक्तम् तस्मान्मुकुंदव्यतिरिक्तःकोनामभगवत्पदस्यार्थः सर्वेश्वरइत्यर्थः २१ धीराःसंतःऊढंधृतम् अंत्यंपरमकाष्ठापन्नंतदाह यस्मिन्नहिंसाउपशमश्चस्वाभाविकोधर्मः २२ एवंस्वभाग्यमभिनंद्यपारिक्षितोपाख्यानंवक्तुमाह अहंहीति अर्यमणःहेसूर्याः त्रयीमूर्तयः अत्रयावानात्मावगमः ममज्ञानं तावदाचक्षेप्रवक्ष्यामि तथाहि यथापक्षिणोनभः आत्मसमं स्वशक्त्यनुरूपमेवोत्पतंति नकृत्स्नम् तथाविपश्चितोपिविष्णोर्गतिंलीलां समंस्वमत्यनुरूपमेववदंतीत्यर्थः २३ २४ ७

अन्वक्षाणः अपश्यन् तं प्रसिद्धमाश्रमम् तस्मिंश्च मुनिं शमीकं २५ प्रतिरुद्धाः प्रत्याहृता इंद्रियादयो येन तम् अतएवोपरतं स्थानत्रयात् जाग्रदादिलक्षणात् परं तुरीयं पदं प्राप्तं
अतएव ब्रह्मभूतत्वादविक्रियम् २६ विप्रकीर्णाभिर्जटाभिराच्छन्नम् रुरुर्मृगविशेषः तस्य चर्मणा चाच्छन्नम् विशेषेण शुष्यत्तालुर्यस्य सः तथाभूतं स मुनिमुदकमयाचत
२७ न लब्धं तृणं तृणासनं भूमिरुपवेशस्थानं च येन सः नसंप्राप्तः अर्घः सूनृतं प्रियवचनं च येन सः २८ मत्सरः तदुत्कर्षासहनम् २९ गतासुं मृतं धनुष्कोट्या चापाग्रेण ३०
सर्पनिधाने राज्ञोऽभिप्रायमाह एषः किं प्रत्याहृतसर्वेंद्रियः सन् मीलितेक्षणः स्थितः यद्वा क्षत्रबंधुभिरागतैर्वा किं नु स्यादित्यवज्ञया मृषा समाधिः सन्निति जिज्ञासयेत्यर्थः
३१ तस्य पुत्रः शृंगीनामा अघं दुःखं तत्र अर्भक मध्ये ३२ पालानां राज्ञाम् पविंपुष्टानां अधर्ममेव निर्दिशति स्वामिनि दासानां यदयं पापाचरणम् बलिभुजां का-
कानामिव शुनामिव चेति ३३ दासत्वं दर्शयति ब्राह्मणैरिति सभांडं भांड एवास्थितम् ३४ तत्तदनंतरम् अहं शास्मि दंडयामि ३५ इति वयस्यानुक्त्वा रोषेण ताम्रे अक्षि

जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ददर्श मुनिमासीनं शांतं मीलितलोचनम् २५ प्रतिरुद्धेंद्रियप्राणमनोबुद्धिमुपारतम् स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् २६ विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च विशुष्यत्तालुरुदकं तथाभूतमयाचत २७ अलब्धतृणभूम्यादिरसंप्राप्तार्घसूनृतः अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह २८ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः ब्राह्मणं प्रत्यभूद्ब्रह्मन्मत्सरो मन्युरेव च २९ स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत् ३० एष किं निभृताशेषकरणो मीलितेक्षणः मृषासमाधिराहोस्वित्किं नु स्यात्क्षत्रबंधुभिः ३१ तस्य पुत्रोऽतितेजस्वी विहरन्बालकोऽर्भकैः राज्ञाघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ३२ अहो अधर्मः पालानां पीव्नां बलिभुजामिव स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ३३ ब्राह्मणैः क्षत्रबंधुर्हि द्वारपालो निरूपितः स कथं तद्गृहे द्वास्थः सभांडं भोक्तुमर्हति ३४ कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ३५ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकः कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ३६ इति लंघितमर्यादं तक्षकः सप्तमेऽहनि दंक्ष्यति स्म कुलांगारं चोदितो मे ततद्रुहम् ३७ ततोऽभ्येत्याश्रमं बालो गले सर्पकलेवरम् पितरं वीक्ष्य दुःखार्तो मुक्तकंठो रुरोद ह ३८ स वा आंगिरसो ब्रह्मन् श्रुत्वा सुतविलापनम् उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे मृतोरगम् ३९ विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि केन वा ते प्रतिकृतमित्युक्तः स न्यवेदयत् ४० निशम्य शप्तमतदर्हं नरेंद्रं स ब्राह्मणो नात्मजमभ्यनंदत् अहो बतांहो महदद्य ते कृतं स्वल्पीयसि द्रोह उरुर्दमो धृतः ४१ न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे यत्तेजसा दुर्विषहेण गुप्ता विंदंति भद्राण्यकुतोभयाः प्रजाः ४२ अलक्ष्यमाणे नरदेवनाम्नि रथांगपाणावयमंग लोकः तदा हि चौरप्रचुरो विनंक्ष्यत्यरक्ष्यमाणोऽविवरूथवत्क्षणात् ४३

णीयस्य सः कौशिकीनदीनस्याः अपः संधिरार्षः वाग्वज्रं शापम् ३६ इति एवं सर्पनिक्षेपेण दंक्ष्यति भक्षयिष्यति पाठांतरे भस्मीकरि-
ष्यति स्मेति पादपूरणे कुलस्यांगारतुल्यं मे मया ततेति ह्रस्वमार्षम् ३७ गले सर्पकलेवरं यस्येत्यलुक्समासः मुक्तकंठः उच्चैरित्यर्थः ३८ ३९ तं सर्पं विसृज्य केनापकारः कृतः ४०
अनाभिनंदनवाक्यमहो इत्यादि बत कष्टम् ते त्वया महत्पापं कृतं द्रोहे अपराधे दमो दंडः ४१ परः विष्णुरित्याख्या ख्यातिर्यस्य तं नरदेवं नृभिः संमातुं सममद्रष्टुम् ४२ अलक्ष्यमा-
णे अदृश्यमाने अविवरूथवत् मेषसंघवत् ४३

नष्टोनाथोयस्यलोकस्यतस्यवसोर्वसुनोधनस्यविलुंपकाद्पहर्तुश्चौरादेर्हेतोर्यत्पापंभविष्यति तदस्मान्निमित्तत्वादस्मानुपेष्यति अनन्वयंसंबंधशून्यमेव तदेवपापंदर्शय-
ति परस्परमिति शपंतिपरुषंवदंति पश्वादीन्घ्नंजते अपहरंति पुरुदस्यवः चोरबहुलाः ४४ आर्यधर्मः सदाचारः शुनांकपीनामिववार्थकामयोरेवाभिनिवेशितचित्तानाम्
४५ एवंराजमात्रस्यशापानर्हत्वमुक्त्वाप्रकृतेविशेषमाह धर्मपालइतिसार्द्धेन हयमेधयाट् अश्वमेधयाजी नन्वेवंभूतश्चेत्तत्कुतोऽपकृतवांस्तत्राह क्षुत्तृडिति स्वागतप्रश्ना-
द्यभावेनावज्ञातः मत्कृतशापंकथमर्हतीत्यर्थः ४६ अस्यमहापापस्यान्यत्प्रायश्चित्तमदृष्ट्वापापमावेदयन्भगवंतंप्रार्थयते अपापेष्विति ४७ राजानेत्वतिशापंदद्यात्तर्हि
निष्कृतिर्भवेदपितत्तुनसंभवति तस्यमहाभागवतत्वादित्याह तिरस्कृताः निंदिताः विप्रलब्धाः वंचिताः क्षिप्ताः अवज्ञाताः हताः ताडिताः अस्यतिरस्कारादिकर्तुः नतत्प्रती-
कारंकुर्वंति तद्भक्ताः विष्णुभक्ताः प्रभवः समर्था अपि ४८ विप्रकृतः अपकृतः अघमपराधं ४९ सुकृतंचेतदित्याह प्रायशइति द्वंद्वेषुसुखदुःखादिषुअगुणाश्रयः सुखदुः

तद्घ्नः पापमुपैत्यनन्वयंयन्नष्टनाथस्यवसोर्विलुंपकात् परस्परंघ्नंतिशपंतिवृंजतेपशून्स्त्रियोर्थान्पुरुदस्यवोजनाः ४४ तदार्यधर्मःप्रविली
यतेनृणांवर्णाश्रमाचारयुतस्त्रयीमयः ततोऽर्थकामाभिनिवेशितात्मनांशुनांकपीनामिववर्णसंकरः ४५ धर्मपालोनरपतिःसतुसम्राड्बृह-
च्छ्रवाः साक्षान्महाभागवतोराजर्षिर्हयमेधयाट् ४६ क्षुत्तृट्श्रमयुतोदीनोनैवास्मच्छापमर्हति ४६ अपापेषुस्वभृत्येषुबालेनापक्वबुद्धि-
ना पापंकृतंतद्भगवान्सर्वात्माक्षंतुमर्हति ४७ तिरस्कृताविप्रलब्धाःशप्ताःक्षिप्ताहतापिवा नास्यतत्प्रतिकुर्वंतितद्भक्ताःप्रभवोऽपिहि ४८
इतिपुत्रकृताघेनसोऽनुतप्तोमहामुनिः स्वयंविप्रकृतोराज्ञानैवाघंतदचिंतयत् ४९ प्रायशःसाधवोलोकेपरैर्द्वंद्वेषुयोजिताः नव्यथंतिनहृष्यंति
यतआत्माऽगुणाश्रयः ५० इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविप्रशापोपलंभनंनामाष्टादशोऽध्यायः १८ सूतउवाच महीपतिस्त्वथतत्कर्मगर्ह्यंविचिंतयन्नात्मकृतंसुदुर्मनाः अहोमयानीचमनार्यवत्कृतंनिरागसिब्रह्मणिगूढतेजसि १ ध्रुवंततोमेकृतदेवहेलनाद्दुरत्ययंव्यसनंनातिदीर्घात् तदस्तुकामंत्वघनिष्कृतायमेयथानकुर्यांपुनरेवमद्धा २ अद्यैवराज्यंबलमृद्धकोशंप्रकोपितब्रह्मकुलानलोमे
दहत्वभद्रस्यपुनर्नमेभूत्पापीयसीधीर्द्विजदेवगोभ्यः ३ सचिंतयन्नित्थमथाशृणोद्यथामुनेःसुतोक्तोनिर्ऋतिस्तक्षकाख्यः ससाधुमेनेन
चिरेणतक्षकानलंप्रसक्तस्यविरक्तिकारणम् ४
खवाद्याश्रयोनभवति ५० इतिश्रीभागवतेमहापुराणेश्रीधरस्वामिविरचितायांप्रथमस्कं-
धेटीकायामष्टादशोऽध्यायः १८ प्रायोपविष्टेगंगायांराज्ञियोऽभिजनावृते शुकस्यागमनंतत्रप्रोक्तमेकोनविंशके १ स्वकृतंतत्कर्मसुनिस्कंधेसर्पप्रक्षेपणम्
गर्ह्यंनिंद्यंचिंतयन्सुदुर्मनाजातः चिंतामेवाहसार्धाभ्याम् अहोइति नीचंपापम् अमीवमितिपाठेसएवार्थः ब्रह्मणिब्राह्मणेगूढंगुप्तंतेजोयस्यतस्मिन् १ कृतंयद्दे-
वहेलनमीश्वरावज्ञापापमित्यर्थः तस्मान्मेव्यसनंभविष्यति तत्तुनातिदीर्घात्कालात् अचिरादेवास्तु तत्रापिअद्धासाक्षात् नपुत्रादिद्वारेणेतिप्रार्थनाकाममसंको-
चतः एवंप्रार्थनायाः प्रयोजनम् अघस्यनिष्कृतायप्रायश्चित्ताय यथापुनरेवंनकुर्यामितिच २ एवंसाक्षात्स्वस्यैवव्यसनंसंप्रार्थ्य तत्प्रागेवकिंचित्प्रार्थयते अद्यैव
मेराज्यादिदहतु प्रकोपितंब्रह्मकुलमेवानलः पुनर्द्विजान्पीडयितुंधीर्मामाभून्नभवेदित्यर्थः ३ इत्थंचिंतयन्सराजामुनेःसुतेनोक्तःसप्तमेऽहनिनिर्ऋतिर्मृत्युर्य-
या भविष्यतितथाऽशृणोत् शमीकप्रेषितशिष्याच्छ्रुत्वाच सतक्षकस्याविषाग्निंसाधुमेने यतोविषयेषुप्रसक्तस्यविरक्तिकारणम् ४ ५ ५

अथोनंतरस्तु मौलोकोपुरस्ताद्राज्यमध्यएवहेयतयाविचारितोविहाय श्रीकृष्णांघ्रिसेवामेवाधिमन्यमानःसर्वपुरुषार्थाधिकांजानन् प्रायमनशनंतस्मिन्नित्यर्थः तत्संकल्पेनोपाविशदि
तियावत् यद्वाप्रायं प्रकृष्टमयनंशरणंयथाभवतितथा ५ अमर्त्यनद्यामिति विशेषणस्यफलमाह यांगंगालसंतीश्रीर्यस्यास्तुलस्याः तयाविमिश्रायेकृष्णांघ्रिरेणवः तैरभ्यधिकंस
र्वोत्कृष्टंयदंबुतस्यनेत्रीतिद्वाहिनी उभयत्रअंतर्बहिश्च सेशान् लोकपालैःसहितान् लोकान् पुनाति मरिष्यमाणः आसन्नमरणः मरणस्यानियतकालत्वात्सर्वोपितथा अतस्तांको
नसेवेत ६ इतिएवंविष्णुपद्यांगंगायांप्रायोपवेशंप्रतिव्यवच्छिद्य निश्चित्य पांडवेयइतितत्कुलोचितत्वंदर्शयति नास्त्यन्यस्मिन्भावोयस्यसः कुतःमुनिव्रतःउपशांतः तत्कुतःमुक्तः
समस्तसंगोयेनसः ७ तत्रतदातद्दर्शनार्थंमुनयउपागताः ननुतीर्थस्नानार्थं कृतार्थत्वात् ननुतादृशानामपितीर्थयात्रादृश्यतेतत्राह प्रायेणेति तीर्थयात्राव्याजैः ८ ९ १० अरु
णादयः कांडर्षित्वविशेषेणपृथकुनिर्दिष्टाः नानायान्यार्षेयाणिऋषीणांगोत्राणितेषुप्रवरान्श्रेष्ठान् शिरसाभुवंस्पृष्ट्वाववंदे ११ विज्ञापनार्थंपुनः कृतप्रणामः विविक्तंशुद्धं

अथोविहायेममुंचलोकंविमर्शितोहेयतयापुरस्तात् कृष्णांघ्रिसेवामधिमन्यमानउपाविशत्प्रायममर्त्यनद्याम् ५ यावैलसच्छ्रीतुलसीविमि
श्रकृष्णांघ्रिरेण्वभ्यधिकांबुनेत्री पुनातिलोकानुभयत्रसेशान्कस्तांनसेवेतमरिष्यमाणः ६ इतिव्यवच्छिद्यसपांडवेयःप्रायोपवेशंप्रतिविष्णुप
द्याम् दध्यौमुकुंदांघ्रिमनन्यभावोमुनिव्रतोमुक्तसमस्तसंगः ७ तत्रोपजग्मुर्भुवनंपुनानामहानुभावामुनयःसशिष्याः प्रायेणतीर्थाभिगमापदेशैः
स्वयंहितीर्थानिपुनंतिसंतः ८ अत्रिर्वसिष्ठश्च्यवनःशरद्वानरिष्टनेमिर्भृगुरंगिराश्च पराशरोगाधिसुतोऽथरामउतथ्यइंद्रप्रमदेध्मवाहौ ९ मे
धातिथिर्देवलआर्ष्टिषेणोभारद्वाजोगौतमःपिप्पलादः मैत्रेयऔर्वःकवषःकुंभयोनिर्द्वैपायनोभगवान्नारदश्च १० अन्येचदेवर्षिब्रह्मर्षिवर्या
राजर्षिवर्याअरुणादयश्च नानार्षेयप्रवरान्समेतानभ्यर्च्यराजाशिरसाववंदे ११ सुखोपविष्टेष्वथतेषुभूयः कृतप्रणामःस्वचिकीर्षितंयत् वि
ज्ञापयामासविविक्तचेताउपस्थितोग्रेभिगृहीतपाणिः १२ राजोवाच अहोवयंधन्यतमानृपाणांमहत्तमानुग्रहणीयशीलाः राज्ञांकु
लंब्राह्मणपादशौचाद्दूराद्विसृष्टंबतगर्ह्यकर्म १३ तस्यैवमेघस्यपरावरेशोव्यासक्तचित्तस्यगृहेष्वभीक्ष्णम् निर्वेदमूलोद्विजशापरूपोयत्रप्रस
क्तोभयमाशुधत्ते १४ तंमोपयातंप्रतियंतुविप्रागंगाचदेवीधृतचित्तमीशे द्विजोपसृष्टःकुहकस्तक्षकोवादशत्वलंगायतविष्णुगाथाः १५

चेतोयस्य अभिगृहीतौसंयोजितौपाणीयेनसः स्वचिकीर्षितंप्रायोपवेशनादियुक्तमयुक्तंवेतिविज्ञापयामास १२ अनुमोदनेनानुग्रहमालक्ष्यात्मानंश्लाघते अहोइति
नृपाणांमध्येमहत्तमैरनुग्रहणीयंशीलंवृत्तंयेषांते एतच्चराज्ञामतिदुर्लभमित्याह ब्राह्मणानांपादशौचात्पादक्षालनोदकात् दूरादुच्छिष्टविण्मूत्रपादांभांसिसमुत्सृजेद्दि
तिस्मृतेः दूरेहितैस्ताद्विसृज्यते ततोपिदूरादेवविसृष्टंक्षिप्तंम् तत्रापिस्यात्तुमयोग्यमित्यर्थः गर्ह्यंकर्मयस्येत्यात्मानमुद्दिश्योक्तम् १३ आस्तांतावदनुग्रहः ब्रह्मशापोपिभ
गवत्प्रसादादेवजातइत्याह तस्यगर्ह्यकर्मणएव अतः अघस्यपापात्मनोगृहेष्वासक्तचित्तस्यमेमप्रसये परावराणामीशएवद्विजशापतयाबभूव यत्रयस्मिन्शापेसति गृहे
षुप्रसक्तोऽभयंधत्तेनिर्विण्णोभवति यतोनिर्वेदमूलः निर्वेदोवैराग्यं मूलंप्राप्तिकारणंयस्मिन् स्वस्यवैराग्यप्राप्यत्वात्तस्यचभयमूलत्वात्तदर्थीद्विजशापंकारितवानित्यर्थः १४
तान्प्रार्थयतेतमिति द्वाभ्यां तंमामुपयातंशरणागतंप्रतियंतुजानंतु देवीदेवतारूपागंगाचप्रत्येतु वाशब्दःप्रतिक्रियाऽनादरे गाथाःकथाः १५ ५ ५

सआश्रयोयेषांतेषुप्रकर्षः संगोभूयात् तस्यांतस्यांसृष्टौजन्मानि १६ अध्यवसायोनिश्चयः प्राचीनानिप्रागग्राणिकूलानियेषांतेषुप्रागग्रेषुकुशेषु आस्तेस्म स्वसुतेजनमे-
जयेन्यस्तोभारोराज्यंयेनसः १७ मुदाव्याकिरन् देवसंघैर्वादितानेदुः १८ प्रजानुग्रहेशीलं स्वभावःसारोबलंचयेषाम् उत्तमश्लोकगुणैरभिरूपंसुंदरमिव १९ भवत्सुपांडवे-
ष्वेषुयेजह्रुरितियुधिष्ठिरादाभिप्रायेण २० परस्परंसंमंत्रयंते सर्वइति परंश्रेष्ठलोकं तत्रहेतुः विरजस्कंनिर्मायं विशोकंचयास्यतीतिकुतस्तत्राह अयमिति २१ आश्रुत्यआक-
र्ण्य समपक्षपातशून्यं मधुच्युत् अमृतस्रावि गुरुगांभीरार्थं अव्यलीकंसत्यं २२ त्रयाणांलोकानांपृष्ठेउपरिसत्यलोकेवेदाययामूर्तिधराभवंति तत्तुल्याः ज्ञानातिशयमुक्त्वा कृपा-
लुतामाह नेहेति भवतांप्रयोजनं परानुग्रहंविनानास्ति तर्हिसएवार्थःस्यात् न आत्मशीलं स्वस्वभावं २३ एतस्यंप्रष्टव्यं विश्रम्भ्याविश्रम्भं कृत्वा एवंकर्तव्यस्य मायइति कृत्यता
तस्मिन्विषयेसर्वात्मनासर्वावस्थासुयत्कृत्यं विशेषतश्चम्रियमाणैः तच्चशुद्धंपापसंपर्करहितं आमृशत विचारयत अभियुक्ताः एकमतयः २४ तत्रतेषुयागयोगतपोदा-

पुनश्चभूयाद्भगवत्यनंतेरतिःप्रसंगश्चतदाश्रयेषु महत्सुयांयामुपयामिसृष्टिंमैत्र्यस्तुसर्वत्रनमोद्विजेभ्यः १६ इतिस्मराजाध्यवसाययुक्तःप्रा-
चीनमूलेषुकुशेषुधीरः उदङ्मुखोदक्षिणकूलआस्तेसमुद्रपत्न्याःस्वसुतन्यस्तभारः १७ एवंचतस्मिन्नरदेवदेवेप्रायोपविष्टेदिविदेवसंघाः प्रश-
स्यभूमौव्यकिरन्प्रसूनैर्मुदामुहुर्दुंदुभयश्चनेदुः १८ महर्षयोवैसमुपागतायेप्रशस्यसाध्वित्यनुमोदमानाः ऊचुःप्रजानुग्रहशीलसारायदुत्तमश्लो-
कगुणाभिरूपम् १९ नवाइदंराजर्षिवर्यचित्रंभवत्सुकृष्णंसमनुव्रतेषु येऽध्यासनंराजकिरीटजुष्टंसद्योजहुर्भगवत्पार्श्वकामाः २० सर्वेवयंताव-
दिहास्महेऽथकलेवरंयावदसौविहाय लोकंपरंविरजस्कंविशोकंयास्यत्ययंभागवतप्रधानः २१ आश्रुत्यतदृषिगणवचःपरीक्षित्समंमधुच्युद्गुरु-
चाव्यलीकम् आभाषतैनानभिनंद्ययुक्तान्शुश्रूषमाणश्चरितानिविष्णोः २२ समागताःसर्वतएवसर्वेवेदायथामूर्तिधरास्त्रिपृष्ठे नेहाथवामुत्र-
चकश्चनार्थऋतेपरानुग्रहमात्मशीलम् २३ ततश्चवःपृच्छ्यमिमंविपृच्छेविश्रभ्यविप्राइतिकृत्यतायाम् सर्वात्मनाम्रियमाणैश्चकृत्यंशुद्धंचत-
त्रामृशताभियुक्ताः २४ तत्राभवद्भगवान्व्यासपुत्रोयदृच्छयागामटमानोऽनपेक्षः अलक्ष्यलिंगोनिजलाभतुष्टोवृतश्चबालैरवधूतवेषः २५
तंद्व्यष्टवर्षंसुकुमारपादकरोरुबाह्वंसकपोलगात्रम् चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननंकंबुसुजातकंठम् २६ निगूढजत्रुंपृथुतुंगवक्षस-
मावर्तनाभिंवलिवल्गूदरंच दिगंबरंवक्त्रविकीर्णकेशंप्रलंबबाहुंस्वमरोत्तमाभम् २७

नादिभिर्विवदमानेषुसत्सुयदृच्छयागांपर्यटन्व्यासपुत्रः तत्र अभवत्प्राप्तः नलक्ष्यमाश्रमादिलिंगंयस्य अवधूतः अवज्ञाय जनैस्त्यक्तोयः तस्येववेषोयस्यसः
२५ तमित्यादीनांप्रत्युत्थिताइतितृतीयश्लोकेनान्वयः द्विगुणान्यष्टौवर्षाणियस्य सुकुमारौपादौकरौ ऊरूबाहू अंसौकपोलौगात्रंचयस्य चारुणी आयतेअ-
क्षिणीयस्मिन् उन्नतानासायस्मिन् लंबत्वादिवैषम्यंविनातुल्यौकर्णौयस्मिन् शोभनेचभ्रुवौयस्मिन् एवंभूतमाननंयस्य कंबुवद्रेखात्रयांकितः सुष्ठुजातः
कंठोयस्य २६ कंठस्याधोभागयोः स्थितेअस्थिनीजत्रुणी मांसेननिगूढेजत्रुणीयस्य पृथुविस्तीर्णंतुंगमुन्नतंचवक्षोयस्य आवर्तवन्नाभिर्यस्य वलिभिस्त्रिर्य-
कुनिम्नरेखाभिर्वल्गुरम्यमुदरंयस्य दिशएवअंबरंयस्य वक्त्रेविकीर्णाः केशायस्य प्रलंबौबाहूयस्य स्वमरेषुश्रेष्ठदेवेषुउत्तमोहरिः तद्वदाभायस्यतम् २७ ७

सदा अपीच्यमत्यंतमं यद्वयो यौवनं तेन या अंगलक्ष्मीर्देहकांतिस्तया रुचिरस्मितेन च गूढवर्चसमपि प्रत्युत्थिताः तं दृष्ट्वा प्रत्युद्गमं कृतवंत इत्यर्थः २८ शिरसैव सपर्या
माजहार आत्मनिवेदनं कृतवान् तेन सहागताः स्त्र्यपत्यादयो निवृत्ताः स चोपविवेश संधिरार्षः २९ स भगवान्ब्रह्मर्ष्यादिसंघैः संवृतः सन् अलंव्यरोचत ग्रहाः शुक्रा
दयः ऋक्षाण्यश्विन्यादीनि अन्यास्ताराः ३० नकुंठा सर्वार्थेषु मेधा यस्य तं प्रणम्य तत्प्रश्नार्थं पुनर्नत्वा ३१ सूनृतां गिरमाह अहो इति पंचभिः सतां सेव्या जाताः यत्तः
अतिथिरूपेण हेतुना तीर्थकाः योग्याः कृताः ३२ ३३ विष्णोः सान्निध्याद्दूरादयइव ३४ पांडुसुतानां प्रियः अतस्तेषां पैतृष्वस्रेयाणां प्रीत्यर्थं तद्गोत्रस्य मे आत्तं स्वीकृतं
बांधवं बंधुकृत्यं येन सः ३५ अन्यथा श्रीकृष्णप्रसादं विना अव्यक्ता गतिर्यस्य म्रियमाणानां नितरां कथं स्यात् वनयिता याचयिता वनयितृतमो वनीयान् तस्य अत्युदार

श्यामं सदाऽपीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् २८ स विष्णु
रातोऽतिथय आगताय तस्मै सपर्यां शिरसाजहार ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपाविवेश पूजितः २९ स संवृतस्तत्र महान्महीय-
सां ब्रह्मर्षिराजर्षिदेवर्षिसंघैः व्यरोचतालं भगवान्यथेंदुर्ग्रहर्क्षतारानिकरैः परीतः ३० प्रशांतमासीनमकुंठमेधसं मुनिं नृपो भागवतोऽभ्युपे
त्य प्रणम्य मूर्ध्नाऽवहितः कृतांजलिर्नत्वा गिरा सूनृतयान्वपृच्छत् ३१ अहो अद्य वयं ब्रह्मन् सत्सेव्याः क्षत्रबंधवः कृपयाऽतिथिरूपेण भव
द्भिस्तीर्थकाः कृताः ३२ येषां संस्मरणात्पुंसां सद्यः शुध्यंति वै गृहाः किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः ३३ सान्निध्यात्ते महायोगिन्पातका
नि महांत्यपि सद्यो नश्यंति वै पुंसां विष्णोरिव सुरेतराः ३४ अपि मे भगवान्प्रीतः कृष्णः पांडुसुतप्रियः पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्तबांधवः
३५ अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं नृणाम् नितरां म्रियमाणानां संसिद्धस्य वनीयसः ३६ अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् पुरु
षस्येह यत्कार्यं म्रियमाणस्य सर्वथा ३७ यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम् ३८ नूनं भगवतो ब्र
ह्मन् गृहेषु गृहमेधिनाम् न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् ३९ सूत उवाच एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा
प्रत्यभाषत धर्मज्ञो भगवान्बादरायणिः ४० इति श्रीभागवते महापुराणे द्वादशसाहस्र्यां पारमहंस्यां संहितायां प्रथमस्कंधे शुकागम
नं नामैकोनविंशोऽध्यायः १९ श्रीकृष्णार्पणमस्तु शुभं भवतु

तया याचेथा इति प्रवर्तकस्येत्यर्थः ३६ सम्यक् संसिद्धिर्यस्मात्तं कार्यं कर्तुं योग्यं कर्तव्यं तु आवश्यकमिति भेदः अत एव सर्वथा म्रियमाणस्य पुरुषस्य यस्मिन् कृते-
संसिद्धिर्मोक्षलक्षणा सिद्धिर्भवति त्वां योगिनां गुरुं पृच्छामि ३७ यच्छ्रोतव्यं यज्जाप्यं यत्कर्तव्यं यत्स्मर्तव्यं यदाराध्यं तद्ब्रूहि विपर्ययमश्रोतव्यादि ३८ तव दर्शनस्य पुन
र्दुर्लभत्वादिदानीमेव कथनीयमित्याशयेनाह नूनमिति गोदोहनमात्रकालमपि ३९ एवमहो इत्यादिकया श्लक्ष्णया मधुरया गिरा आभाषितः अभिमुखीकृतः पृष्टश्च
४० आर्यधर्मजमाहर्तारमिव नो कृत्वा परीक्षितं नृपं ब्रह्मास्त्रादभिरक्षितं कलिजयख्यातिं च कृत्वा भुवि अंते यः शुकरूपतः स्वपरमज्ञानोपदेशेन तं शापादावदमुं नमा
मि परमानंदाकृतिं माधवम् १ इति श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां प्रथमस्कंधटीकायां एकोनविंशोऽध्यायः १९ श्रीकृष्णार्पणम॰

श्रीगणेशायनमः द्वितीयेतु दशाध्यायैः श्रीभागवतमादितः उद्देशलक्षणोक्तिभ्यां संक्षेपेणोपवर्ण्यते १ तत्रतुप्रथमेऽध्यायेकीर्तनश्रवणादिभिः स्थविशेषेभगवद्रू पेमनसोधारणोच्यते २ यन्नामकीर्तनंदानतपोयोगादिसत्फलम् तंनित्यंपरमानंदंहरिंनरनमःस्मर ३ अथाद्वितीयस्कंधव्याख्या उक्तः पूर्वमुपोद्घातः सप्रसंगः शुका गमः राज्ञापृष्टंनृणांकृत्यमथाहशुकसन्मुनिः ४ राज्ञःप्रश्नमभिनंदति वरीयानिति तेत्वयापुंसांश्रोतव्यादिषुमध्येयः परःश्रेष्ठःगोचरः प्रश्नः कृतएषःवरीयान् यतोलोक- हितमेतत् मोक्षहेतुत्वात् आत्मविदांमुक्तानांचसंमतोयतः १ तत्रतावत्स्वाभाविकाक्रियमाणमनर्थेहेतुत्वंवदन्ब्रूहियद्यावेपर्ययमित्यस्योत्तरमाह श्रोतव्यादीनीतित्रि- भिः गृहेषुसक्तानामतएवगृहमेधिनांतद्व्रतपंचसूनापराणाम् मेधेतिहिंसार्थः २ तेश्चवद्यैवायुर्व्ययोभवतीत्याह नक्तंरात्रौयद्वयःआयुः तन्निद्रयाव्यवायेनरत्यावाह्रि यते दिवाअह्नियद्वयः तत् अर्थेहया अर्थार्थमुद्यमेन सिद्धेर्थेकुटुंबपोषणेनवा चकारावनुक्तसमुच्चयार्थौ ३ ननुनश्वरकुटुंबाद्यर्थंकथमायुर्व्ययंकुर्यात्तत्राह देहादिषु आत्मनःसैन्येषुपरिकरेषु असत्सुमिथ्याभूतेष्वपि प्रमत्तःप्रसक्तः तेषांपित्रादिदृष्टांतेननाशंपश्यन्नपिनानुसंधत्ते ४ एवंविपर्ययप्रश्नोत्तरमुक्त्वा श्रोतव्यादिप्रश्नस्यो

नमोभगवतेवासुदेवाय श्रीशुकउवाच वरीयानेषतेप्रश्नः कृतोलोकहितंनृप आत्मवित्संमतःपुंसांश्रोतव्यादिषुयःपरः १ श्रो तव्यादीनिराजेंद्रनृणांसंतिसहस्रशः अपश्यतामात्मतत्त्वंगृहेषुगृहमेधिनाम् २ निद्रयाह्रियतेनक्तंव्यवायेनचवावयः दिवाचार्थेहयाराजन् कुटुंबभरणेनवा ३ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि तेषांप्रमत्तोनिधनंपश्यन्नपिनपश्यति ४ तस्माद्भारतसर्वात्माभगवान्हरिरीश्व रः श्रोतव्यःकीर्तितव्यश्चस्मर्तव्यश्चेच्छताभयम् ५ एतावान्सांख्ययोगाभ्यांस्वधर्मपरिनिष्ठया जन्मलाभःपरःपुंसामंतेनारायणस्मृतिः ६ प्रायेण मुनयोराजन्निवृत्ताविधिषेधतः नैर्गुण्यस्थारमंतेस्मगुणानुकथनेहरेः ७ इदंभागवतंनामपुराणंब्रह्मसंमितम् अधीतवान्द्वापरादौपितुर्द्वै पायनादहम् ८ परिनिष्ठितोपिनैर्गुण्येउत्तमश्लोकलीलया गृहीतचेताराजर्षेआख्यानंयदधीतवान् ९ तदहंतेऽभिधास्यामिमहापौरुषिकोभ वान् यस्यश्रद्दधतामाशुस्यान्मुकुंदेमतिःसती १० एतन्निर्विद्यमानानामिच्छतामकुतोभयम् योगिनांनृपनिर्णीतंहरेर्नामानुकीर्तनम् ११

त्तरमाह तस्मादिति हेभारतभरतवंश्य सर्वात्मेतिप्रेष्ठत्वमाह भगवानितिसौंदर्यम् ईश्वरइत्यावश्यकत्वम् हरिरितिबंधहारित्वम् अभयंमोक्षमिच्छता ५ अतःपर मन्यच्छ्रेयोनास्तीत्याह एतावानेवजन्मनोलाभःफलम् तमाह नारायणस्मृतिरिति सांख्यादिभिः साध्यइतितेषांस्वातंत्र्येणलाभत्वंवारयति सांख्यमात्मानात्मविवेकः योगोष्टांगः अंतेतुस्मृतिःपरोलाभः नतन्महिमावक्तुंशक्यइत्यर्थः ६ तत्रसदाचारंप्रमाणयति प्रायेणेति विधिनिषेधतः विधिनिषेधाभ्याम् निवृत्ताः नैर्गुण्येब्रह्मणि स्थिताअपिस्मप्रसिद्धम् ७ किमिदमपूर्वंकथयसिसत्यमत्सपूर्वमेवेदमित्याह इदंभगवत्प्रोक्तम् तन्नामेकंप्रधानंपुराणम् ब्रह्मसंमितंसर्ववेदतुल्यम् यद्वा ब्रह्म- सम्यक्मितंयेन कुतस्त्वयाप्राप्तमतआह अधीतवानिति सिद्धस्यतवकुतोऽध्ययने प्रवृत्तिस्तत्राह परिनिष्ठितोपीति गृहीतचेताआकृष्टचित्तः ९ महापुरुषोविष्णुः तदीयः यस्ययस्मिन्श्रद्धांकुर्वताम् सती अहैतुकी १० साधकानांसिद्धानांचनातःपरमन्यच्छ्रेयोऽस्तीत्याह एतदिति इच्छतांकामिनां तत्तत्फलसाधनमेतदेव निर्विद्यमा नानांमुमुक्षूणांमोक्षसाधनमेतदेव योगिनांज्ञानिनांफलंचैतदेवनिर्णीतम् नात्रप्रमाणंप्रवक्तव्यमित्यर्थः ११ ५ ५ ७ ५

